जय भारति




साप्ताहिकी संस्कृत पत्रिका । प्रतिभौमवासरं प्रकाश्यते ।

प्रथमं वर्षः । विजयवत्सरे श्रावणी अमावास्या पञ्चमी सञ्चिका ।

संचालकाः गलगली रामाचार्याः ] मङ्गलवारः [ संपादकः पण्ढरीनाथाचार्यः

## .... वार्ताः विवेकश्च ....

श्री श्यामप्रसाद मुखर्जेः अकालमृत्योः परंपरया कारणीभूतः शेख अब्दुल्ला अद्य कारागृहदुःखम् अनुभवति ।

अत्युत्कटैः पुण्यपापैः इहैवफलमश्नुते

● ● ● ●

शेख अब्दुल्लाकृतानाम् अनन्तानन्तानामपि महापराधानां विचारणा न क्रियते ।

श्री नेहरोस्तु कृपाछत्रे यवनानां नो विचारणा

● ● ● ●

श्री नेहरू विश्वसति यत् " अस्माभिः उपकृताः काश्मीर यवनाः मतगणनायां भारत एव संनिविष्टा भवेयुरिति ।

विश्वासो नैव कर्तव्यः धर्मान्धयवनेष्विह

● ● ● ●

मतगणानायां काश्मीरस्य राष्ट्रीय यवनाः कुत्र मिलेयुः ? किं भारतम् उत पाकिस्तानं ?

पुरा सीमाप्रान्तोदाहरणेन एवं सिद्धम् यत्

" स्वजातिर्दुरतिक्रमा

पाकिस्तान प्रधानमन्त्री वदति यत् ' दानशूराः भारतीयाः । ते अतः काश्मीरमपि दद्युः दानरूपेण पाकिस्तानाय " इति ।

सत्यम् भारतीयैः सत्पात्रे दानं दीयत एव । किंतु चोरेभ्यः पश्यतो हरेभ्यो वा न कदाचिदपि दत्तं दीयते वा ।

● ● ● ●

लोकसभायां भाषासमस्यायां उपस्थितायां गृहमंत्री श्री कैलासनाथ काटजूमहोदयः पुनरेकवारं संस्कृतमेव राष्ट्रभाषा भवितुं सर्वात्मना योग्या इति घण्टाघोषं प्रत्यपादयत् ।

हा हन्त-किन्तु-परंतु-चिरादेव अयम् राष्ट्रवीरः एवमेव " ऊर्ध्वं बाहुः विरौत्येषः न च कश्चित् शृणोति तम् । "

● ● ● ●

कोडगप्रान्ते धनलक्ष्मी नाम्नी नारी विना अन्नपानादिकं चिरं जीवति । वैज्ञानिक दृष्ट्या तत्संशोधनार्थं सर्वकारः निपुणान् द्राक्तरान् नियोजयति ।

हन्त अन्येयं चिन्ता आहारमंन्त्रिणाम् यतः यदि सर्वेऽपि जनाः तामेव अनुकृत्य बिनाऽहारं जीवेयुः तदा का गतिः आहारमंत्रिस्थानस्य ?

## महाभारते

# द्रौपदी कृष्णं युद्धाय

# — प्रेरयते —

( तृतीयाङ्कादनुवृत्तम् )

" एतत्समर्थं पार्थानां तव चैव यशस्करम् ।
क्रियमाणं भवेत् कृष्ण क्षत्रस्य च सुखावहम् "

इति श्लोके तु युद्धकरणम् एव पाण्डवानां तव च योग्यं यशस्करं च । तथाऽकरण एव ' असमर्था एव पाण्डवाः शान्तिव्याजेन दुर्योधनदास्यम् अंगीकृतवन्तः" इति महती अपकीर्तिः एव आगच्छेत् इति सर्वदाऽपि लोकापवादात् बिभ्यन्तं धर्मराजं सूचयति। न केवलं स्वार्थदृष्ट्या एव युद्धं कर्तव्यम् परंतु परोपकारदृष्ट्याऽपि विचार्यमाणे युद्धम् अस्माभिः कर्तव्यमेव इत्याह सूक्ष्मज्ञानिनी ' क्षत्रस्य च सुखावहम् " इति । अर्थात् दुर्योधनः सर्वेषाम् अपि राज महाराजानां पीडाकारी राजा । युद्धे तस्य मारणं सर्वेषामपि तत्रापि ' क्षत्रस्य च सुखावहम् । अनेनैव च वाक्येन महायुद्धे दुर्योधनेन सह प्रवर्त्स्यमाने बहूनाम् एव दुर्योधनसन्त्रस्तानां क्षत्रियाणां साहाय्यमपि नः लभ्येत इति तर्कविलासं करोति दूरदर्शिनी याज्ञसेनी।

" क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता " ॥

अनेन च श्लोकेन राक्षसीमहत्वाकाङ्क्षया लोभातिशयेन वा परेषां राजैश्वर्यम् अपहरतां क्षत्राणां वधः अवश्यंकर्तव्य एव । ईदृशलोभाविष्टानां हिंसाऽपि धर्म एव भवति । अतः दुष्टस्य लोभाकृष्टस्य अस्मद्राज्यापहारिणः दुर्योधनस्य हननं स्वधर्मानुष्ठानरूपमेव । अन्यथा धर्मलोपः महापापश्च संभवेत् इति सुसूक्ष्मं सूचयति ' स्वधर्ममनुतिष्ठता ' इति विशेषणेन ।

## किं द्रौपद्याः ब्राह्मणपक्षपातः ???

एवं लोभिसामान्यस्य वधः धर्म इत्येव कार्यः इति प्रतिपादनावसरे द्रौपदी प्रसङ्गवशात् अथवा अप्रासङ्गिकस्याऽपि स्वयं प्रसक्तिं कृत्वा एकं विषयं सधैर्यं प्रस्थापयति । यत् " लोभमास्थितः नरः क्षत्रियो वा भवतु अक्षत्रियो वा योवा कोवा भवन्नपि स्वधर्मम् अनुतिष्ठता अवश्यं हन्तव्य एव । किन्तु " अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववास्थितात् " इति वचनेन " यो यो लोभी स स वध्यः " इति स्वप्रतिपादितस्यैव महानियमस्य अपवादस्थानं प्रदर्शयति । अमुं च तस्याः ब्राह्मणपक्षपातं बहव एव आधुनिकाः आक्षिपान्ति निन्दन्ति च । परन्तु अस्माभिः 'पण्डिता च पतिव्रता' इति सुप्रसिद्धायाः कृष्णायाः यथार्थम् आशयं ज्ञातुं प्रयत्नः कार्यः । न सा ब्राह्मणी नवा ब्राह्मणोपजीविनी वा। नचाप्युन्मत्ता भ्रान्ता वाऽसीत् । सारासारविचारशालिनी अपि द्रौपदी कुतो वा स्वजातीयानामपि क्षत्रियाणां वधं कण्ठरवेण उक्त्वा विजातीयानां ब्राह्मणानां परं हननं कुतो वा निषेधति ? तत्रापि " सर्वपापेष्ववस्थिताद् " इत्यनेन च कीदृशस्यापि महतः अपराधस्य पञ्चमहापातकानां वा आचरणेऽपि ब्राह्मणश्चेद् नैव हन्तव्यः इति ब्राह्मणानां सर्वथा अवध्यत्वमेव प्रस्थापयति । तत् किमर्थम् ? इति चेत् तदपि तत्रैव स्पष्टीकरोति कुशला कृष्णा " गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् " ब्राह्मणः ब्रह्मकुले उत्पन्न इति वा शिखायज्ञोपवीतादिकं धारयति इति वा न अवध्यः किन्तु गुरु इति हेतोः सः अवध्यः । सर्ववर्णानां गुरुत्वमेव अवध्यत्वस्य बीजम् । अत्र ब्राह्मण हनने महानेव सामाजिकः अनर्थः राष्ट्रिया च हानिः भवेदिति सूचयति राजकार्यधुरंधरा महाराज्ञी द्रौपदी । गुरोः हनने राष्ट्रे ज्ञानस्यैव लोपः स्यात् । सर्वात्मना ज्ञानलोपे च " इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् । " राष्ट्रस्य

—शेषं ८ पुटे

॥ जय भारति ॥




वि. सं. श्रा. कृ. ३०. १८७५

# संस्कृतकवीनां सुवर्णसन्धिः

सांप्रतं जागतिक कथास्पर्धा प्रचलति। तत्र भारतीयाः सर्वा अपि प्रान्तीया भाषाः अहमहमिकया भागं गृण्हन्ति। अस्मिन् वर्षे च महात्मा गान्धीमहोदयस्य सुपुत्रः श्रीदेवदास गान्धी महोदयः तत्र संस्कृतभाषाया अपि स्थानं कल्पयति। हिन्दुस्तान टायिम्स नामकस्य सुप्रसिद्धस्य आंग्लपत्रस्य संपादकोऽयं श्री देवदास गान्धीमहोदयः एवम् उद्घोषयति यत् "स्पर्धार्थम् आगतानां विविधभाषीयाणां भारतीय कथानां मध्ये अत्युत्तमाभ्यः अष्टकथाभ्यः क्रमशः १५००, १०००, ७५०, ६००, ५००, ४००, ३००, २००, मुद्राणां पारितोषिकं प्रदीयते स्वेनैव। एताभ्यः अष्टकथाभ्यः एव निर्वाच्य श्रेष्ठतमाः तिस्रः कथाः जागतिककथास्पर्धार्थे प्रेष्यन्ते यत्र इंग्लंड, अमेरिका, फ्रान्स, बेल्जियम्, आस्ट्रेलिया, न्यूझीलंड, फिन्लेंड, स्विझर्लण्ड, फिलिपायिन्, तुर्कीस्रायिल्, जपान, हिंन्दुस्तान, पाकिस्तान, प्रभृतिराष्ट्राणि भागं गृण्हन्ति। विश्वकथास्पर्धायाम् अत्युत्तमेति परिगणिता निर्णीता च कथा ५००० डालराणां पारितोषिकं लभेत।

केवलं संस्कृतकथासु अपि स्पर्धार्थे प्रेषितासु अत्युत्तमत्वेन निर्णीताभ्यः तिसृभ्यः कथाभ्यः क्रमेण ५००, ४००, ३००, रूप्यकाणां पारितोषिकं प्रदीयते। अतोऽत्र संस्कृतपण्डितैः सोत्साहं भागं गृहीत्वा रक्षणीया सुरभारत्याः प्रतिष्ठा पुरातनं गौरवं च। अतस्त्वर्यतां संस्कृतकविभिः कल्पनाकुशलैः कथाकोविदैः। अस्यां कथाप्रतियोगितायां भागं जिघृक्षुभिः अवश्यं परिशीलनीया सूचना

१) कथाः ३०-९-५३ दिनाङ्कपर्यन्तं प्रेषयितुं शक्यन्ते। २) कथायां १५०० तः ४००० पर्यन्तं शब्दाः भवेयुः। ३) कथा स्वतन्त्रा भवेत्। ४) कथाविषये तु न कोपि विशेषनिर्बन्धः अस्ति। ५) कथनां तिस्रः प्रतयः 'संपादक' भवितव्यम् नागपूर इति संकेतेन प्रेष्याः। ६) विश्वकथास्पर्धार्थं प्रेषणाय स्वयमधिकारश्चेत् आंग्लभाषायां परिवर्त्यैव प्रेषणीयाः कथाः। नो चेत् भवितव्यं संपादक एव भाषान्तरं कृत्वा प्रेषयिष्यति ७) लेखकेन कथाया उपरि स्वनामसङ्केतादिकं किमपि नैव लेख्यम्।

संस्कृतकवीनां कथालेखकानां सुरभारत्याः सर्वोत्तमत्वानिदर्शनाय ईदृशम् अपूर्वम् एव सुवर्णसन्धिम् उपकल्पयतः "भवितव्यं" पत्रव्यवस्थापकान् सानन्दम् अभिनन्दामः।

## संस्कृतपण्डितानाम् उत्तरदायित्वम्

परंतु तदुपकल्पितस्य सन्धेः सम्यगुपयोगस्य भारः पण्डितानां शिरसि पतति। वस्तुतोऽत्र लेशतोऽपि न भेतव्यम्। विपक्षेऽपि न किमपि बाधकम्। इतरभाषाकथापेक्षया संस्कृतकथानां विशेष सौकर्यं प्राशस्त्यं च प्रदत्तमास्ते। जागतिककथास्पर्धापूर्वभावितया प्रथमं भारतीय कथास्पर्धा एव प्रचलितेव भवति। स्पर्धार्थमागतासु नानाभाषाकथासु अष्टकथा एव निर्वाच्यन्ते अत्युत्तमाः। ता एव श्रेष्ठतया परिगणिता एव अष्टकथाः जागतिककथास्पर्धार्थे प्रेष्यन्ते। तत्र तस्मिंश्च कथाष्टके कदाचित् कस्याश्चित् भाषायाः प्रवेश एव न स्यात्। परन्तु संस्कृत कथा भारतीयकथास्पर्धायां विजयिनी भवतु वा मा वा। विद्यमानासु संस्कृतकथास्वेव निर्वाच्य जागतिककथास्पर्धार्थं प्रेषणा क्रियते। यदि जागतिक स्पर्धायां संस्कृतकथा विजयिनी स्यात् तदा सुरभाषायाः जयडिण्डिम एव वाद्येत विश्वस्मिन्नेव विश्वे। अन्ततो भारतीय कथाष्टकेऽपि अत्युत्तमतया संस्कृतेन स्थानमासाद्येत तदापि

सिद्धं नः समीहितम्। भारते भाति भारती पुरस्तादाकल्पम्। यदिकदाचित् भारतीयकथाष्टके संस्कृतकथा स्वसौन्दर्येण न विशिष्येत स्वस्वारस्येन नातिरिच्येत तदापि न किमपि बाधकम्। वर्तमानास्वेव याद्दशतादशास्वेव संस्कृतकथास्वेव तिस्रः कथाः निर्वाच्य पारितोषिकाणि प्रदीयन्ते। ईदृशं च सौविध्यं प्राशस्त्यं च न कस्याश्चिदपि संस्कृतादन्यस्याः भारतीयभाषायाः विद्यते। श्री देवदासगान्धी महोदयानां संस्कृतपक्षपातितया, संस्कृतोन्निनीषया, संस्कृतप्रोत्साहनोत्सुकतया, तथा भवितव्य संपादकानां प्रयत्नपरम्परया च लब्धमीदृशं सौकर्यम्। यदि इदानीमपि संस्कृतपण्डिताः वाचंयमित्वम् अङ्गीकृत्य लेखनीसन्यासं स्वीकुर्वन्ति, गजनिमीलकया वा उदासते, स्थाणुत्वतदभावकोटिकसंशीतिलक्ष्यतामेव वा यद्युपयान्ति, शैवमन्दिरे परमेश्वरप्रतिमायाः पुरस्तात् स्थापितशिलावृषभवद्वा यदि जोषं जोषं जोषमेव अवतिष्ठन्ते तदा 'निराश्रिता हन्त हता मनस्विता' मनीषिता।

एवमाहूता अपि असकृदामन्त्रिता अपि संस्कृतकवयः यदि अहमहमिकया न पुरस्सरन्ति, कथा वा विलिख्य न प्रेषयन्ति, किन्तु निद्रामुद्रितलोचनाः श्रीमद्गाम्भीर्येणैव स्वकल्पितप्रौढिम्नेव मौनमहाव्रतमङ्गीकुर्युः तदा देवदासगान्धी प्रभृतयः "संकृतज्ञाः हि सर्वज्ञाः संस्कृतज्ञो बृहस्पतिः। अपारे शब्दसंसारे संस्कृतज्ञः प्रजापतिः" इति भावयन्तः सर्वेऽपि लौकिकजना दूरादेव नमस्कुर्युः पण्डितान्। संस्कृतविषये च "निर्वीरमुर्वीतलम्,, "अहो ज्ञातमेतेषां मौनरहस्यम्' जातोऽद्य सत्यार्थप्रकाशः, विदितमद्य पण्डितमार्तण्डानां स्वरूपं याथार्थ्येण" इति उक्त्वा संस्कृतपण्डितानां दिशायै दूरान्नमस्कुर्वीरन्नेव।

अथवा कुतोवाऽयमसत्कल्पना विस्तरः। वयमेव तावत् मितमतयः संङ्कुचितदृष्टयः कूपकूर्माः। नाद्यापि निर्वीरमुर्वीतलम्। सन्त्येव लसन्त्येव च भारतस्य कोणे कोणे सद्यो हृद्यगद्यपद्यादिप्रणयनपटीयांसः भूयांस एव विद्वांसः। विद्यन्ते विद्योतन्ते च ग्रामे ग्रामे पट्टणे पट्टणे नवनवकथाकल्पनाविलासकुशलाः संस्कृतवरकवयः। कियन्मात्रमिदं चतुर्वेदचतुराणां षट्शास्त्रपारंगतानां चतुर्दशविद्यासु लब्धवैशारद्याणां सर्वज्ञकल्पानां पण्डित पुण्डरीकाणाम् एकक्षुल्लककथालेखनं नाम। नूनमेते नवनवोन्मेषशालिप्रज्ञाप्रगल्भाः पण्डित पुन्नागाः निमिषार्ध एव छोटिकावादनावधौ एव अक्षिपक्ष्मोत्क्षेपावसर एव कामपि कमनीयां भावरम्यां कथां विलिख्य प्रेषयेयुरेव। तेषामेव च कथाः भारतीय कथासु जागतिककथासु सर्वोत्तमस्थानमासादयेयुः सर्वप्रथमं च पारितोषिकं पुरस्कारं प्राप्नुयुः। सुरसरस्वत्याश्च जयवैजयन्तीं समुध्दूनयेयुः। संस्कृतस्य जयदुन्दुभिं पुनरेकवारं समग्रसंसारे सोत्साहं वादयेयुः। सर्वनरभाषापेक्षया सुरभाषा सदा सर्वकालेऽपि साधीयसी एव स्वादीयसी एव चेति जगत एव निदर्शयेयुरेव। ईदृशविबुधशेखरमणीन् "ज्वलति चलितेन्धनो वन्हिः विप्रकृतः पन्नगः फणां कुरुते" इति न्यायेन उच्चेतयितुमेव उत्साहयितुमेव च अस्माभिरीषदुपालम्भनमार्गः स्वीकृतः परमार्थतः पण्डितानां योग्यतामवगच्छद्भिरपि। अतः सत्वरमेव सर्वैरपि संस्कृतपण्डितैः सद्य एव सरसाः सुंन्दराः सरलाः सहजाः हृदयङ्गमा हृदयद्राविणी रसरस्याः भावरम्याश्च कथाः विलिख्य संप्रेषणीयाः याभिः समस्त जगदेव विस्मितं आनन्दितम् उल्हसितं च भवेत्। येन सुरभाषायाश्च भासकालिदास भारवि बाणभट्टादिभिर्वर्धिता कीर्तिः नैव सर्वात्मना प्रणश्येत्। संस्कृतस्य च पुरातनं गौरवं प्रतिष्ठा च अक्षता सुरक्षिता चआकल्पं तिष्ठेत्। किंबहुना यदुचितं देवभाषागौरवस्य यद्योग्यं संस्कृतपंडितानां यच्च सदृशं भारतीय संस्कृतेः तथा कर्तव्यं पण्डितैरिति निवेद्य विरमामः।

---

# शिक्षणमन्त्रिभिः संस्कृततीर्थपदवीधरशिक्षकाणाम्

## अन्यायः दूरीकर्तव्यः।



महाराष्ट्रे शास्त्री-पण्डित शिक्षकाणां नेतारः तेषामन्यायं दूरीकर्तुं प्रयतमानाः अहर्निशम्, तथाच संस्कृत–पाली–अर्धमागधी भाषाशास्त्र शिक्षणतज्ञाः, ग्रन्थकाराः, वक्तारः, विश्वविद्यालय-परीक्षकाः, छात्रेषु लब्धकीर्तयः अध्यापकाः, पुणेतीर्थपदवीधरसंघस्य अध्यक्षाः, सुप्रसिध्दाः पण्डितप्रकाण्डाः, नारायण वासुदेव तुंगार, काव्यतीर्थ, पालीतीर्थ, साहित्यभूषण, ४०८ नारायणपेठ, पुणें २ महोदयाः मराठीभाषायां मुंबई शिक्षणाधिकारिणः उद्दिश्य, एकं पत्रं प्रकाश्य, तस्मिन् एवं अलिखन्– वंगीयराज्यशासनद्वारा प्रचाल्यमानायाः तीर्थपदव्याः अभ्यासक्रमः बी. ए. ऑनर्स संस्कृत अभ्यासक्रमेण तुल्यः, तथाच प्राक् आंग्लराज्यशासनकालेऽपि मध्यमविद्यालयस्थसंस्कृतशास्त्रीशिक्षकाय बी. ए. एस्. टी. तुल्यं देयं, इति आंग्लानां राजाज्ञा आसीन् मुंबईप्रान्ते। तत्सर्वं दृष्ट्वा डॉ. पी. एल्. वैद्य, प्रि. न. गो. सुरु, प्रो. व्ही. पी. बोकील, प्रो. वेलणकर, प्रो. का. वा. अभ्यंकर, इत्यादिभिः द्वाविंशति सुप्रसिद्ध संस्कृतप्राध्यापकैः– संस्कृतशिक्षणतज्ज्ञैः, तथा च प्रि. दोंदे, डॉ. खैर, इत्यादि सुप्रसिद्धैः पञ्चसप्तति मध्यमविद्यालयप्रमुखैः तीर्थपदवीधरसंस्कृतशिक्षकाय बी. ए. एस्. टी. सी. सदृशं वेतनं प्रदातव्यम् इति स्वाक्षरीप्रधानपुरःसरं निर्णयः दत्तः, तत् पत्रं आंग्लभाषायां प्रसिध्दमासीत्।

तं निर्णयं मानयित्वा, मुंबई प्रान्तीयैःबहुभिः मध्यमविद्यालयैः आत्मनः तीर्थपदवीधरशिक्षकाय बी. ए. एस्. टी. सी. सदृशं वेतनं प्रदत्तम्। अनन्तरं १६ अक्टोबर १९५१ दिनाङ्के मुंबईशिक्षणाधिकारिभिः तीर्थपदवीधर संस्कृतशिक्षकाय मॅट्रिकसदृशं वेतनं प्रदातव्यम् इति पत्रद्वारा प्रकाशितम्, तत्पत्रानुरोधं सर्वैः मध्यमविद्यालयैः तीर्थपदवीधराय मॅट्रिकसदृशं वेतनं प्रदत्तं, तस्मात् बहूनां तीर्थपदवीधराणाम् बह्वी द्रव्यहानिः, मानहानिश्च संजाता, एतां अनर्थपरम्परां सत्वरं मुंबईशिक्षणाधिकारिणः दूरीकुर्वन्तु इति, प्रार्थनापत्रं अधिकारिभ्यः प्रेषितवन्तः पं. तुंगारशास्त्रिणः। तथा च शिक्षणमन्त्रिपदस्थानां दिनकरराव देसाई, शिक्षण प्रमुखपदस्थानां रॅंग्लर–पावटे, श्री. सामंत, महोदयानां पुरतो गत्वा, तेभ्यश्च पं. तुंगारशास्त्रिणः तीर्थपदवीधरविषयिणीं सर्वां अनर्थपरम्परां अकथयन् महता कौशल्येन। एम्. ए. बी. टी. पदवीधारिभिः शतसंख्याकैः मध्यमाविद्यालयस्थैः अध्यापकैः अस्माकं तीर्थबान्धवेभ्यः बी. ए. एस्. टी. सी. वेतनं देयम्। तथाच ज्ञान–वयो–वृद्धं तीर्थशास्त्रिशिक्षकं गृहीत्वा एकां नवीनां शास्त्रिवेतनसमितिं स्थापयित्वा, तया समित्या भारते संस्कृत–पाली–अर्धमागधी भाषाणां यत्र यत्र परीक्षाः भवन्ति, तासां अभ्यासपत्रं, नियमावलिं, प्रश्नपत्रिकां, परीक्षोत्तीर्णाः इदानीं क अध्यापनकार्यं कुर्वन्ति, तेभ्यः कियत् वेतनं लभ्यते, इति सर्ववृत्तानाम् एकत्रीकृत्य, निर्णेतव्यम्। स निर्णयः शास्त्रशुद्धः, पक्षपातरहितः च भवेत् इति प्रार्थनापत्रं शिक्षणमन्त्रिभ्यः प्रेषितम् शतसंख्याकैः एम्. ए. बी. टी. पदवीधारिभिः शिक्षकैः, तदर्थं तेभ्यः शतशः धन्यवादान् सर्वे यच्छन्ति। तथा च पं. तुंगारशास्त्रिणः अहर्निशं आत्मनः बहुमूल्यानि कार्याणि त्यक्त्वा संस्कृत पण्डित शिक्षकाणाम् अन्यायं दूरीकर्तुं प्रायतन्त, तदर्थं सर्वे प्राचीन–नव्य संस्कृत शिक्षकाः तेभ्यः सहस्रशः धन्यवादान् दत्वा, कृतज्ञतां तत्र तत्र प्रकटयन्ति, इति लिखितुं वयमत्यन्तं मोदामहे। शिक्षणमन्त्रिणः अन्यायं सत्वरं दूरीकुर्युः इति तान् संप्रार्थ्य, विरमामः।

---



# वाद्यरत्नं वीणा

अत्र जगति चतुर्विधानि वाद्यानि सन्ति। अवगुण्ठित वाद्यं, सुषिरवाद्यं, घनवाद्यं, तन्तुवाद्यं चेति। भरतनाट्यशास्त्रस्य २८ अध्याये अन्येषु च ग्रन्थेषु एतेषां चतुर्णामपि वाद्यानाम् उल्लेखः दृश्यते। अस्मिंश्च वाद्यचतुष्टये तन्तुवाद्यं श्रेष्ठतरं मधुरतमं श्रवणसुभगं च। तत्रापि वीणा तु वाद्यशिरोमणिः एव। वीणाक्वणनस्य श्रवणमात्रेणैव अरसिकोऽपि मानवः मन्त्रमुग्ध इव परवश एव भवति। शिशुर्वेत्ति पशुर्वेत्ति वेत्ति वीणारसं फणी। वागभिमानिनी देवता साक्षात् सरस्वती अपि सर्वदाऽपि अङ्के वीणां धारयति। वीणायाः वाण्याश्च नित्यमविनाभाव एव। वीणायाः प्रभावेणैव भगवान् नारदः देवानाम् इव दैत्यानामपि प्रीतिपात्रम् आसीत्। नारदस्य वीणाक्वणेन आकृष्टाः राक्षसाः देवगणान्तर्गतमपि तं कलहप्रियं मुनिं मानयन्ति स्म। माघकविः "रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्न श्रुतिमण्डलैः स्वरैः। स्फुटीभवद्ग्रामविशेषमूर्छनामवेक्षमाणं महतीं मुहुर्मुहुः" इति श्लोके नित्यं करधृतामपि स्ववीणाम्, 'अवेक्षमाणं महतीं मुहुर्मुहुः" इत्यनेन क्षणे क्षणे नवताम् उपेष्यत् वीणावाद्यस्य स्वरूपं तस्य च निरन्तरनिरीक्षणे नारदस्य अक्षुण्णम् अक्षीयमाणं कौतुकं च सम्यगेवनिरूपयति। अन्योऽपि च धन्यः कविः 'वीणाविनोदरसिको मुनिराविरासीत्' इति तं नारदं वर्णयति। महाकविः बाणभट्टस्तु महाश्वेतायाः वीणावादनव्यतिकरं बहुहृद्यङ्गमया रीत्या वर्णयति। चन्द्रापीडस्य इन्द्रायुधस्य किंबहुना चराचर प्रकृतेरेव वीणावाद्यमुग्धत्वं वर्णयति। "वीणेव अङ्कादङ्कं सञ्चरन्ती" इत्यनेन च वीणायाः प्रीत्यास्पदापत्यानामिव अङ्कमेव उचितं क्लृप्तं च स्थानमिति स्वतः– सिद्धमिव प्रमेयं दृष्टान्ततया उपवर्ण्य तत्र आत्मगौरवं निदर्शयति। वत्सराज स्वप्नवसवदत्तयोः जगत्प्रसिध्दे शृंङ्गारप्रसङ्गे कल्याणमहोत्सवे तु उदयनस्य घोषवती नाम्नी वीणा प्रधानमेव पात्रम् आवहति।

अस्याः वीणायाः विविधा एव प्रकाराः विशेषाः नामान्तराणि च प्राचीनग्रन्थेषु उपलभ्यन्ते। तत्र ब्रह्मवीणा, किन्नरी, वल्लकी, ज्येष्ठा, चित्रा, हस्तिका, परिवादिनी, त्रिशरी, कुब्जिका, नकुलोष्ठी, वंसरीत्यादीनि मुख्यानि। माघकविश्च वल्लकी परिवादिनीत्यादि शब्दान् अपि वीणापर्यायत्वेनैव प्रायुङ्क्त। 'संङ्गीतरत्नाकर' ग्रन्थे तु वीणा, रावणहस्तका, आलापिनी, कुतपेति नानातन्तुवाद्यानां समुल्लेखः लभ्यते।

अस्य च वीणानाम्नः तन्तुवाद्यविशेषस्य संशोधनम् उदयःविकासः वा कथं कदा वा जातः इत्येतत्तु महानेव विवादास्पदेविषयः। बौद्धकालीनानां वीणानां धनुराकारं दृष्ट्वा केचित् एवम् प्रतिपादयन्ति यत् "बौद्धकाले ईसवीय दशमशतकपर्यन्तमपि धनुराकारा एव वीणाः विशेषप्रचारे आसन्। प्रायः धनुषाम् ज्याऽऽस्फालनजनिताः शब्दा एव वीणावाद्यस्य कल्पनायाः मूलं भवेत् इति। परन्तु वीणावाद्यस्य विकासवादिनामयं विचारः बहूनामेव वाद्यविशारदानां नैव सम्मतः।

वस्तुतस्तु वेदेष्वपि वीणायाः महावीणायाश्च निर्देशः परिदृश्यते। ऋग्वेदस्य १।८५।१० मंत्रे 'वाण' इति शब्दः प्रयुक्तो वर्तते। अस्य च वैदिकस्य 'वाण' शब्दस्य विवरणं व्याख्या च ६।६।१३ ताण्ड्यब्राह्मणे

—शेषं ८ पृष्ठे

## सत्यसन्धः बालः

( श्री गोपालकृष्ण गोखले )

श्री महालक्ष्म्याः निवासपावने करवीरक्षेत्रे कस्यांचन प्राथमिकशालायां कस्मिंश्चिद् दिने कश्चन-शिक्षकः सर्वेभ्योऽपि बालकेभ्यः किमपि गणितम अकथयत्। न कस्यापि बालकस्य उत्तरं यथार्थमासीत्। तदा शिक्षकः क्रुद्धः भूत्वा सर्वेभ्योऽपि बालकेभ्यः कपोलचपेटिकाः प्रदाय अवदत् "धिङ्मूर्खाः श्वोऽपि वा एतद् गणितं सम्यग्, आकलय्य आगच्छन्तु श्वोऽपि यद्येवमेव तदा शिर एव स्फोटयिष्यामि वः" इति जगर्ज। परेद्युः प्रातःकाले पुनः परीक्षितानि सर्वेषामपि छात्राणां शिलाफलकानि। प्रहृतानि च सर्वेषामपि पृष्ठफलकानि। अन्तेस्थितं विनीतं बालकं दृष्ट्वा शिक्षकः "अरे गोपाल आनयात्र तवशिलाफलकं। किमिदं कृतं त्वया गणितं। दर्शय त्वरितमिति।" तदा गोपालः अदर्शयत् स्वफलकम्। यथोचितरीत्या गणितं कृत्वा योग्यमुत्तरं प्रदत्तमासीत् तत्र। तद् दृष्ट्वा शिक्षकस्य महानेव सन्तोष एव समजनि। इतरछात्रेभ्यस्तु स अधिकमेव अकुप्यत्। तानाहूय "मूर्खाः पश्यत गोपालस्य बुद्धिमत्ताम्' तेन कथमिदं गणितमाकलितमवलोकयत। धिङ्-निर्लज्जाः" इति वदन्नेव पुनः पुनः प्राहरत् क्रमेण सर्वानपि छात्रान्। गोपालं च सानन्दं सबहुमानं सादरमाहूय "गोपाल त्वमेकःशालारत्नम्" इति पृष्ठतः आस्फालयामास। परन्तु गोपालस्तु गद्गदकण्ठः निःशब्दं रोदिति स्म। तदा शिक्षकः तं गाढम् लिङ्ग्य सस्नेहं चिबुकमुन्नमय्य "अङ्ग किमेवं रोदिषि? इयत्सु छात्रेषु त्वमेक एव इदं कृतवानसि कठिणतममपि गणितम्। तव बुद्धिमत्तां दृष्ट्वा नितरां प्रीतोऽस्मि। त्वमेकएव अत्र शालायां प्रतिभावान् असि।"

"नास्मीत्यतो रुद्यते"

प्रत्युदतीसरत् स्खलद्वचनः गलद्बाष्पः गद्गदगलः गोपालः

"किं तर्हि"

"नैतद गणितं मया कृतं गृहे केनचन वरीयसा बान्धवेन इदं भवतो भयात् कारयित्वा मयैव कृतमिति मिथ्याऽवदम्। बहुविधो हि इदानीं मदीयोऽपराधः। प्रथमतः नाशक्नवं स्वयं गणितमिदं कर्तुं इति एकःअपराधः। अत्र त्वाऽपि अन्येन कारयित्वाऽपि स्वयमहमेव अकरवमिति मिथ्या अवदम् इति एषः द्वितीयोऽपराधः। अध्यापकानां तथा बालकानां च वञ्चना कृता इति तृतीयोऽपराधः। सर्वेऽपि सहाध्यायिनः मयैव हि पुनर्मारिता इति तुर्योऽपराधः "एवमनेकदोषदुष्टोऽहं नेड्यस्ताड्यो हि सर्वथा।" क्षन्तव्योऽहं भवद्भिरिति"

अध्यापकस्तु अपराधिनोऽपि तस्य सत्यसन्धतां प्रामाणिकतां च दृष्ट्वा भृशं प्रसन्नः आनन्देन तदपराधान् अक्षमत। पुरस्ताच्च अयमेव सत्यार्थी विद्यार्थी गोपालकृष्ण गोखले इति प्रसिद्धः नेताग्रणीः बभूव।

---

## लेखकेषु सूचना—

वैजयन्त्यां सरलाः सरलतराः सरलतमा एव च लेखाः प्रकाश्येरन्। दीर्घसमासभूयिष्ठाः कठिणशब्दक्लिष्टाः लेखाः नैव प्रकटीक्रियेरन्। कृशाङ्ग्यां वैजयन्त्यां लघीयांसः एव लेखाः अवकाशं विन्देरन्। दीर्घप्रबन्धावधारावाहिकथाः काव्यानि वा नैव प्रेषणीयानि। अत्र हि वाचकरुचिमनुरुध्य विनोदपराणि विचारप्रचुराणि वा गद्यान्येव सरलानि सुलभानि सरसाणि चेदेव प्रकाशपदमुपनीयन्ते। पद्येषु भावगीतानि चाटुश्लोकाः स्फुटश्लोकाः व्यङ्ग्यश्लोकाः विडम्बनपद्यानि वा पञ्चषाणि प्रत्यङ्कं प्रकाश्येरन्। लघुतमकथा-व्यङ्ग्यप्रबन्धाः कविचरितानि, काव्यविमर्शाः, व्यक्तिपरिचयाः देशवर्णना, सरसाख्यायिकाश्च सरलशैल्यां संक्षेपेण विलिख्य प्रेषणीयाः।

— ६ पृष्ठतः अनुवृत्तम्

एवं कृतं दृश्यते यत् 'वीणा हि शततन्त्रीका वाद्येष्व-त्युत्तमा तथा। महावीणेति विख्याता वाण इत्यभिधीयते शतपथब्राह्मणे १३।१।५।१ तथा तैत्तिरीये तु ३।९।१४।१ स्थाने च "वीणा श्रिय एव स्वरूपम्। यदा मानवः श्रियं विन्दते तदा तत्कृते वीणा वाद्यते इत्या युक्तम्। तैत्तिरीय शाखायां (१७।३।१) वाणस्य वीणायाश्च निर्माण प्रकारः निरुपितः दृश्यते।

सामवेदे च अलाबुवीणा, वक्रवीणा, महावीणा, कपिशीर्ष वीणा, इत्यादि नानाविधानां वीणानां समुल्लेखः परिदृश्यते। कर्मकाण्डस्य लाट्यायन श्रौतसूत्रे (४।२।८) पिच्छोटा काण्डवीणानां वर्णना वर्तते। एवं बहुपुरातनकालादेव भारतीयाः तन्तुवाद्येषु तत्रापि वीणा वादनकलायां पटीयांसः विद्वांसः आसन् इति ज्ञायते।

## वीणा विशिष्टा देवताः

सरस्वती तु सदैव 'या वीणावरदण्डमण्डित करेति सुप्रसिद्धैव। भगवान् शंकरोऽपि वीणाप्रवीण एवेति ज्ञायते। तस्य च रुद्रवीणा सर्वजनविदितैव वर्तते। सरस्वतीवीणायाः नाम 'कच्छपी'। वीणा विनोद रसिकस्य नारदमुनेः वीणायाः नाम 'महती'। स्वर्गे च इन्द्रादिदेवान् सुधर्मसभामेव सविशेषं संप्रीणयन्त्याः तुम्बुरु वीणायाः नाम 'कलावती'। दृश्यतामत्रं 'वैजयन्ती' कोशगतः श्लोकः

"विश्वावसोस्तु बृहती तुम्बुरोश्च कलावती।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी"॥



To ____________

____________

____________

— २ पृष्ठतः अनुवृत्तम्

सर्वतोमुखी सार्वकालिकी च अधोगतिः नियतैव। ततो ज्ञाने सर्वथा शून्ये "भवति विनिपातःशतमुखः। ततः पुनः प्रत्युत्थानस्य आशाऽपि सुदूरमेव परास्ता स्यात्। अतो राष्ट्रकल्याणाकांक्षिभिः कीदृशेऽपि प्रसङ्गे ज्ञानज्योतिर्यथा न शाम्येत् तथा दक्षता स्वीकार्या। तच्च ज्ञानज्योतिः ज्ञानोपदेशकस्य गुरोः संरक्षणे संपोषण एव सर्वदा जाज्वल्यमानम् अवतिष्ठेत्। तादृशं च गुरुत्वं ब्राह्मणानामेव इति ते ब्राह्मणाः न हन्तव्याः सर्वथा इति गुरुतरं अभिप्रायं मनसि निधार्यैव "अन्यत्र ब्राह्मणात् तात" इत्युक्तं वाक्चतुरया पाञ्चाल्या।

ब्राह्मणानामपि पक्षपातेन द्रौपद्या सुखासिका नैव विरचिता किन्तु असिधारैव। सूक्ष्मज्ञया तया भीमभामिन्या "ब्राह्मणः प्रसृताग्रभुक्" इति हेतुगर्भ-विशेषणेन अवध्यत्वलक्ष्यस्य ब्राह्मण्यस्य निर्दाक्षिण्यपरीक्षार्थं कश्चन निष्ठुर एव निकषः अवस्थापितः। यः सर्ववर्णानामपि सर्वाः विद्याः शिक्षितुं, गुरुः भवितुं समर्थः, यश्च प्रसृताग्रभुक् अर्थात् जनैः यदा यावत् यथा दीयते तदैव तावदेव स्वीकृत्य भुक्त्वा संतृप्यति, स्वकीयं च शिक्षणकार्यं प्रचालयति स एव ब्राह्मणः। अत्र च द्रौपद्याः दृष्टौ ब्राह्मणेन प्रथमतः सर्वविद्यासु प्रावीण्यं संपादनीयम्। ततः सः "प्रसृताग्रभुक्" च भवेत्।

Edited & Printed By- P. K. Galagali at Chandrika Printing Works & Published by him at *Vaijayanti Karyalaya Yogamandir*. *Bagalkot*. Dist:- Bijapur.